काव्यमाला. ६४.

काश्मीरिकमहाकविश्रीक्षेमेन्द्रकृता

# भारतमञ्जरी ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधिता ।

सा च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता ।

१८९८



मूल्यं रूप्यकपञ्चकम् ।

# भारतमञ्जरीविषयानुक्रमणी ।

**आश्वमेधिकपर्व ।**

# काव्यमाला ।

काश्मीरिकमहाकविश्रीक्षेमेन्द्रविरचिता

## भारतमञ्जरी ।

### आदिपर्व ।

समस्तवदनोद्गीतब्रह्मणे ब्रह्मणे नमः ।
नमः प्रजापतिभ्यश्च कृष्णद्वैपायनाय च ॥ १ ॥
वृद्धश्रवाः पुरा सूतो रोमहर्षणसंभवः ।
पौराणिको मुनिर्द्रष्टुं नैमिषारण्यमभ्यगात् ॥ २ ॥
शौनकस्य मुनेस्तत्र सत्रे द्वादशवार्षिके ।
तं पप्रच्छुः कथाश्चित्राः परिवार्य तपस्विनः ॥ ३ ॥
सोऽब्रवीद्व्यासशिष्येण जनमेजयभूपतेः ।
यद्वैशम्पायनेनोक्तं सर्पसत्रे कथाद्भुतम् ॥ ४ ॥
प्रणम्य परमं धाम विष्णुं धातारमच्युतम् ।
मतं व्यासस्य वक्ष्यामि भारतं श्रृणुतानघाः ॥ ५ ॥
श्रूयते किल लोकेऽस्मिन्सर्वतस्तमसावृते ।
बृहदण्डमभूदेकं प्रजाकारणमव्ययम् ॥ ६ ॥
तस्मात्प्रजापतिरभूत्ततोऽयं सर्गविस्तरः ।
कालेन प्रलयं याति सर्गोऽयं विपुलभ्रमः ॥ ७ ॥
पुनश्च भवतीत्येवं मायेयं परिवर्तते ।
आदितो सह्य इत्यासीद्बृहद्भानुमुखावरः[१] ॥ ८ ॥

---

१. 'दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः । सविता सऋचीचोऽर्को भानुराशावहो रविः ॥ पुरा विवस्वतः सर्वे मह्यस्तेषां तथावरः ॥' इति भारतम्.

देवभ्राडस्य पुत्रोऽभूत्सुभ्राडस्य सुतस्ततः ।
दशज्योतिःशतज्योतिःसहस्रज्योतिषोऽभवन् ॥ ९ ॥
तेभ्यः सहस्रवंशेभ्यः कुरुवंशादयो नृपाः ।
मान्धातृना(रा)मनहुषप्रमुखा च कुलावली ॥ १० ॥
भ्रातुर्द्वैपायनः क्षेत्रे पुत्रान्मातुरनुज्ञया ।
अजीजनत्रीनिवाग्नीन्धृतराष्ट्रपुरोगमान् ॥ ११ ॥
धृतराष्ट्रानुजः पाण्डुः क्षेत्रजांस्तनयान्वने ।
अवाप धर्मपवनसुरेन्द्राश्विसमुद्भवान् ॥ १२ ॥
पितर्युपरते तेषां धार्तराष्ट्रनिवेशने ।
दौर्योधनो मन्युवह्निर्जज्वाल द्यूतमारुतः ॥ १३ ॥
वनवासादिभिः क्लेशैः कुपितास्ते महारणे ।
जघ्नुः परस्परं क्षत्रं निःशेषा येन भूरभूत् ॥ १४ ॥
समन्तपञ्चकक्षेत्रे निहतास्ते महारथाः ।
कीर्तिमन्तो दिवं प्रापुर्मान्धातृनहुषोपमाः ॥ १५ ॥
वैचित्रवीर्यः पुत्रेषु हतेषु भृशदुःखितः ।
शुशोच संजयस्याग्रे स्मरन्पाण्डवविक्रमम् ॥ १६ ॥
तरत्तुरंग(त्तरङ्ग)तरलसंसारविशरारुताम्(हतान्) ।
आश्वासयामास नृपं संजयः समुदाहरन् ॥ १७ ॥

अनुक्रमणिका ॥ १ ॥

श्रुत्वेति सूतात्संक्षेपं पुनः पप्रच्छ शौनकः ।
समन्तपञ्चके क्षेत्रे कथां पृष्टोऽब्रवीच्च सः ॥ १८ ॥
पुरा क्षत्रक्षयं कृत्वा भर्गशिष्यः स भार्गवः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ १९ ॥
ततः प्रभृति पुण्यं तन्मुनीनां वचसा किल ।
तत्राभवन्महद्युद्धं कुरुपाण्डवभूभृताम् ।
अक्षौहिण्यो दशाष्टौ च तत्रैव निधनं गताः ॥ २० ॥

रथो गजो नराः पञ्च त्रयोऽश्वाः पत्तिरुच्यते ।
सेनामुखं गुल्मगणो वाहिनी पृतना चमूः ॥ २१ ॥
क्रमादनीकिनी चैतत्त्रिगुणं त्रिगुणं भवेत् ।
अनीकिनीं दशगुणामाहुरक्षौहिणीं बुधाः ॥ २२ ॥
वेदवेदाङ्गसंयुक्तं भारतं कल्मषापहम् ।
पर्वाण्यष्टादश प्रोक्तं बहुवृत्तान्तभूषितम् ॥ २३ ॥
पौष्यपौलोमवृत्तादि शतमन्तरपर्वणा[म्] ।
विस्तारितं व्यासशिष्यैः शुकेन च जगत्त्रये ॥ २४ ॥

पर्वसंग्रहः ॥ २ ॥

पारीक्षितस्य नृपतेर्भ्रातृभिः सरमासुतः ।
ताडितो भीमसेनाद्यैर्मातरं शरणं ययौ ॥ २५ ॥
क्रुधा कश्यपजायाथ निर्दोषमशपन्नृपम् ।
अदृष्टं प्राप्स्यसि भयं न चिरादिति मा(सा)ब्रवीत् ॥ २६ ॥
तच्छ्रुत्वा चकितो गत्वा मुनिं[1] वव्रे पुरोहितम् ।
भ्रातृभिः सहितस्तस्थौ निर्वृतो जनमेजयः ॥ २७ ॥
अत्रान्तरे लोहदन्तो धौम्यो नाम महामुनिः ।
परीक्ष्य शिष्यान्विदधे ज्ञाननिर्धूतसंशयान् ॥ २८ ॥
स शशास पुरः शिष्यं श्रीमान्पाञ्चाल्यमारुणिम् ।
क्षेत्रे जलं बधानेति स च गत्वा तथाकरोत् ॥ २९ ॥
जलप्रवाहविवरे दत्त्वात्मानं ररक्ष यत् ।
क्षेत्रं तेनास्य भगवानभवद्वरदो गुरुः ॥ ३० ॥
आहूतो गुरुणा यस्मादुद्दाल्य क्षेत्रमुत्थितः ।
मुनिरुद्दालक इति प्रथितस्तेन सोऽभवत् ॥ ३१ ॥

---

१. 'स कदाचिन्मृगयां गतः परीक्षितो जनमेजयः कस्मिंश्चित्स्वविषये आश्रममपश्यत् । तत्र कश्चिदृषिरासांचक्रे श्रुतश्रवा नाम । तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरोहित्याय वव्रे ॥' इति भारतम्.

कृतकृत्ये गते तस्मिन्नुपमन्युरथापरः ।
गोरक्षणे संनियुक्तो गुरुणा भैक्ष्यभोजनः ॥ ३२ ॥
तं गुरुः पीवरं दृष्ट्वा प्राह केनासि वर्तसे ।
भैक्ष्येणेत्युपमन्युश्च प्रोवाच रचिताञ्जलिः ॥ ३३ ॥
ममानिवेद्य नार्होऽसि भैक्ष्यं भोक्तुं यतव्रतः ।
द्विर्भैक्ष्यमुपरोधाय परेषां तन्न ते क्षमम् ॥ ३४ ॥
गव्यं क्षीरं कुतः स्वं ते वत्सफेनं तदेव च ।
कृपणेति निषिद्धोऽसौ धौम्येनाशनमत्यजत् ॥ ३५ ॥
अर्कपत्राशनात्सोऽथ कालेनान्ध्यमुपागतः ।
कूपे निपतितो दूरादाहूतो गुरुणावदत् ॥ ३६ ॥
अर्कपत्राशनादन्धः कूपे निपतितः प्रभो ।
अहमित्येतदाकर्ण्य धौम्यः प्राह कृपाकुलः ।
वत्स स्तुत्वाश्विनौ द्वौ त्वं दिव्यं चक्षुरवाप्नुहि ॥ ३७ ॥
श्रुत्वेत्याश्विनसूक्तेन स्तुत्वा तौ प्राप तद्वरात् ।
अपूपं गुरवे तं च साम्रतं स न्यवेदयत् ॥ ३८ ॥
ततो गुरोर्वरात्सोऽभूज्ज्ञानवान्दिव्यलोचनः ।
उपमन्युः परीक्षाग्निशुद्धो जाम्बूनदप्रभः ॥ ३९ ॥
वेदनामा तृतीयोऽथ धुरि गौरिव संहितः ।
गुरुणा ज्ञानसर्वस्वे संतोषाद्धाजनीकृतः ॥ ४० ॥
ततः कालेन शिष्योऽभूद्वेदस्यापि तदाश्रमे ।
उत्तङ्को नाम तपसां महसां स्वमिवाश्रयः ॥ ४१ ॥
कदाचिदथ तं धृत्वा शिष्यं गेहे जितेन्द्रियम् ।
स क्रियापरिचर्यायै वेदो याजयितुं ययौ ॥ ४२ ॥
क्रियामहीनां त्वं कर्ता निर्दिष्टो गुरुणा गृहे ।
ऋतौ गुरुवदागच्छेत्यूचिरे तं गुरुस्त्रियः ॥ ४३ ॥

---

१. 'अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्य वरयित्वोपाध्यायं चक्रतुः । स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कनामानं शिष्यं नियोजयामास ॥' इति भारतम्.

तदनादृत्य स यदा तस्थौ काष्ठमिवाचलः ।
गुरुरेत्य तदा चक्रे तं निजज्ञानभाजनम् ॥ ४४ ॥
दक्षिणामाहरामीति ब्रुवाणमिति तं गुरुः ।
आह प्रदीयतां वत्स मत्पत्न्या यत्समीहितम् ॥ ४५ ॥
उत्तङ्केन ततः पृष्टा किं ददामीति तद्वधूः ।
प्राह पौष्यापराख्यस्य सौदासस्य महीपतेः ॥ ४६ ॥
भार्य्यास्ति दमयन्त्याख्या तस्यास्त्वं मणिकुण्डले ।
मह्यं देहीति तच्छ्रुत्वा प्रतिश्रुत्य जगाम सः ॥ ४७ ॥
व्रजन्पथि ददर्शाथ पुरुषं वृषवाहनम् ।
शुश्राव तस्माद्गोरस्य पुरीषं भक्षयेति च ॥ ४८ ॥
तद्वाक्याद्भक्षयित्वा तद्ययौ पौष्यनिकेतनम् ।
तत्रान्तःपुरमासाद्य क्षत्रियां न ददर्श सः ॥ ४९ ॥
तामदृष्ट्वा नृपं प्राह त्वद्भार्या किं न दृश्यते ।
तन्निशम्याब्रवीत्पौष्यस्तोषादभ्यागतप्रियः ।
त्वं न पश्यसि मे जायामुच्छिष्टस्तां पतिव्रताम् ॥ ५० ॥
श्रुत्वेत्युत्तङ्कः संस्मृत्य सत्यं गोमयभोजने ।
भक्षिते न मयाचान्तमुच्छिष्टोऽसीत्युवाच तम् ॥ ५१ ॥
अथोपविश्य विधिवत्समाचम्य ददर्श ताम् ।
क्षत्रियां तेजसो मूर्तां लक्ष्मीमिव पतिव्रताम् ॥ ५२ ॥
निजवृत्तान्तमावेद्य याचिता तेन सा ददौ ।
ते दिव्यकुण्डले तस्मै प्रभामण्डलमण्डिते ॥ ५३ ॥
तक्षकोऽर्थयते नित्यमिमे सत्कुण्डले द्विज ।
अप्रमत्तेन गन्तव्यमित्युत्तङ्कमुवाच सा ॥ ५४ ॥
प्रतिगृह्य तया दत्ते रुचिरे मणिकुण्डले ।
पौष्येणामन्त्रितः श्राद्धे दृष्ट्वान्नं तं शशाप सः ॥ ५५ ॥
अशुच्यन्नमिदं पौष्य त्वया मे समुपाहृतम् ।

अन्धो भविष्यसीत्युक्ते तेन पौष्यः समभ्यधात् ।
भविष्यसि च्छिन्नवंशस्त्वमदुष्टान्नदूषणात् ॥ ५६ ॥
इत्युक्त्वान्नं तदन्विष्य पौष्यः पुनरुवाच तम् ।
भगवन्नापराधो मे मुक्तकेशैरुपाहृतम् ।
सकेशमशुचिप्रायमन्नं तस्मात्क्षमस्व मे ॥ ५७ ॥
श्रुत्वेत्युत्तङ्कः प्रोवाच भूत्वान्धो दृष्टिमाप्स्यसि ।
वारय प्रतिशापं मे त्वमपि क्ष्माभृतां वर ॥ ५८ ॥
पौष्योऽब्रवीत्तीक्ष्णवाचो ब्राह्मणाश्वपलाशयाः ।
अतोऽन्यथा क्षत्रियाश्च नास्मि शापक्षये क्षमः ॥ ५९ ॥
उत्तङ्कोऽथाब्रवीत्पौष्य त्वदुक्तं मां न बाधते ।
शुद्धान्नदूषणाच्छापस्त्वया दत्तो न तत्तथा ॥ ६० ॥
उक्त्वेति तूर्णं प्रययौ व्रजतस्तस्य वर्त्मनि ।
वार्युपस्पृशतस्तीरनिहिते वाससावृते ।
भिक्षुरूपो जहाराशु कुण्डले किल तक्षकः ॥ ६१ ॥
स प्रविश्याथ पातालं तक्षकान्वेषणोद्यतः ।
स्तुत्वा नागान्ददर्शाग्रे विचित्रं भुजगालये ॥ ६२ ॥
पटं सितासितगुणं वयन्त्यौ तत्र योषितौ ।
द्वादशारं तथा चक्रं कुमारैः षड्भिरञ्चितम् ॥ ६३ ॥
ततः पुरंदरं स्तुत्वा हयारूढं ददर्श तम् ।
तत्तुरंगगुदद्वारे तद्गिरा समुपाधमत् ॥ ६४ ॥
ध्मायमानस्य तस्याग्निः सधूमः स्रोतसां मुखैः ।
निर्गतो नागभवनं चक्रे धूमान्धकारितम् ॥ ६५ ॥
भीतस्ततस्तक्षकोऽस्मै ददौ ते रत्नकुण्डले ।
ते प्राप्य हृष्टस्तेनैव वाजिना प्रययौ गुरुम् ॥ ६६ ॥
दत्त्वा ते गुरुभार्यायै गुरुं पप्रच्छ कौतुकात् ।
पटं चक्रं हयस्थं च नरं च वृषवाहनम् ॥ ६७ ॥